स त्रैलोक्यगुरुः सुदुस्तरभवाकूपार[1]पारंगतो
मारव्यूह[2]जयप्रगल्भसुभटः शास्ता तव स्तान्मुदे ॥

वसुक[ल्पं[3]]स्य ॥

४

n r 241 कामक्रोधौ द्वयमपि यदि प्रत्यनीकं वशित्वे[1]
हत्वानङ्गं किमिव हि रुषासाधितं[2] त्र्यम्बकेन ।
यस्तु क्षान्त्या शमयति शतं मन्मथाद्यान्[3]नरातीन्
कल्याणं वो दिशतु स मुनिग्रामणीर्[4]एकबन्धुः ॥

सघश्रियः ॥

५

श्रेयांसि वः स सुगतः कुरुतादपार
संसारसागरसमुत्तरणैकसेतुः ।
दुर्वारमारपरिवारबलावलेप
कल्पान्तसंततपयःप्रसरैरहार्यः ॥

अपराजितरचितस्य ॥

६

शास्ता समस्तभुवनं भगवानपाया
त्पायादपास्त[1]तिमिरो मिहिरोपमेयः ।
संसारभित्तिभिदुरो भवकन्दकन्द
कन्दर्पदर्पदलनव्यसनी मुनीन्द्रः ॥

वसुकल्पस्य ॥

---

३ [1] MS. छ [2] MS ब्रू [3] A space is perhaps left in the MS for ल्प but *Sml P* has Vasuka as author of our No 59

४ [1] *Skm* प्रसिद्ध [2] MS °विच ? [3] *Skm* द्दी [4] MS च

६ [1] MS °धास्तु

७

कारुण्यामृतकन्दलीसुमनसः प्रज्ञावधूमौक्तिक *Skm I 243
ग्रीवालंकरणश्रियः शमसरित्पूरोत्सलक्ष्मीकराः ।
ते मौलौ भवतां मिलन्तु जगतीराज्याभिषेकोचित
सम्भेदा अभयप्रदानचरणप्रेङ्खन्नखाग्रांशवः ॥

८

शीला(fol 2a)म्भःपरिषेकशीतलदृढध्यानालवालस्फुर *Skm I 244
द्दानस्कन्धमहोन्नतिः पृथुतरप्रज्ञोल्लसत्पल्लवः ।
देयात्तुभ्यमवार्यवीर्यविटपः क्षान्तिप्रसूनोदयः
सुच्छायः षडभिज्ञकल्पविटपी संबोधिबीजं फलम् ॥

एतौ श्रीधरनन्दिनः ॥

९

एकस्यापि मनोभुवस्तदबलापाङ्गैर्जगन्निर्जये
†कार्ये†[1] निह्नुतसर्वविस्मयरसव्यक्तिप्रकारा वयम् ।
यस्त्वेनं सबलं च जेतुमभितस्तत्कम्पमात्रं भुवो
नारेभे सुगतस्तु तद्गुणकथा स्तम्भाय नः केवलम् ॥

कुमुदाकरमतेः ॥

१०

प्रत्येकानेकजातिप्रतिवपुरमितावृत्तिजन्मार्जितैनो
भोक्तृव्रातोज्जिहीर्षाफलनिलयमहापौरुषस्यापि शास्तुः ।

---

७ [1] Aksara ill-formed, more resembling ण [2] MS सु
[3] MS स [4] Written °तास्मि (for °तास्मि) [5] MS हा
८ [1] MS र्स [2] MS प्रसन्नो°, *Skm* प्रसूनोद्गमः [3] *Skm* घ
[4] MS व
९ [1] *Sic* MS, contrary to sense and metre Read काम?
१० [1] MS °त्येकान [2] MS त्मौ [3] MS °यि स्वा

केऽप्युत्कर्षं स्तुवन्ति स्मरमपि जयतस्तद्वदामः किमस्मि
न्यो भस्मासीत्कटाक्षज्ज्वलनकणिकया द्रागुमाकामुकस्य

वल्[1]लणस्य

११

पायाद्वः समयः स मारजयिनो वन्द्यो ऽपि [1]तास्त्रोत्कर:
क्रोधाद्यत्र तदुत्तमाङ्गकवलोन्मीलन्मनो[2]विक्रमः।
आसीदद्भुतमौलिरत्नमिलितव्यात्तान[न]च्छायिका
मालोक्यात्मन एव मारसुभटः पर्यस्तधैर्योदयः ॥

श्रीपार्श्ववर्मण. ॥

१२

खेलाचञ्चलसंचरन्निजपदप्रेङ्खोललीलामिल
त्सद्यःसान्द्रपरागरागरचितापूर्वप्रसूनश्रियः।
आश्लिष्यन्मधुलम्पटालिनिवहस्योच्चैर्मिथश्चुम्बनै
र्व्याकोषः कुसुमाञ्जलिर्दिशतु वः श्रेयो जिनायार्पितः।

जितारिनन्दिन.

१३

दरोन्मुक्तारक्तस्फुरदधर[1]वीथीक्रमवम
न्मयूखान्तर्मूर्छद्द्युति दशनमुद्देशवशिनः।
मुखं तद्वः शास्तुर्दिशतु शिवमज्ञानरजनी
व्यवच्छेदोज्जृम्भन्महिमघनसंध्यात[2]प इवः ॥

त्रिलोचनस्य ॥

१० [1] MS र्सं

११ [1] *Sic* MS for त्रासोत्कट, with short syllable before त्र, commonly in Buddhist Sanskrit? [2] MS मा

१३ [1] MS वे [2] MS भ

१४

कन्दर्पादपि सुन्दराकृति fol 2b रिति प्रौढोत्सलद्रागया
वृद्धत्वं वरयोषितोऽनयदिति त्रासाकुलस्वान्तया।
मारस्यापि शरैरभेद्यहृदिति श्रद्धाभरप्रह्वया
पायाद्वः स्फुटबाष्पकम्पपुलकं रत्या जिनो वन्दितः॥

तस्यैवेति श्रुति.॥

१५

पादाम्भोजसमीपसंनिपतितस्वर्णाथदेहस्फुर *Shm I 242
न्नेत्रस्तोमतया परिस्फुटमिलन्नीलाब्जपूजाविधिः।
वन्दारुत्रिदशौघरत्नमुकुटोद्भूत[1]प्रभापल्लव
प्रत्युन्मीलदपूर्वचीवरपटः शाक्यो मुनिः पातु वः॥

वसुकल्पस्य॥

१६

क एकस्त्वं पुष्पायुध म[1]म समाधिव्ययविधौ
सुपर्वाणः सर्वे यदि कुसुमशस्त्रास्तदपि किम्।
इतीवैनान्[2]नूनं य इह सुमनोऽस्त्[3]रांत्वमनय
त्स वः शास्ता शस्तं दिशतु दशदिग्मारविजयी॥

---

१५ [1] *Shm* °स्तपंत्र [2] MS सं

१६ [1] MS न [2] MS नू [3] MS स्त

## ॥ लोकेश्वरव्रज्या ॥

१७

द्युतिस्वच्छज्योत्स्नापटपटलवृष्ट्या न कमलं
न चन्द्रः सान्द्रश्रीपरिमलगरिम्णास्यममलम् ।
मधूद्राणां निद्राभिदुरमपमुद्राङ्कुतमुद
श्चकोरान् बिभ्राणं सरसिरुहपाणेरवतु वः ॥

पण्डितबुद्धाकरगुप्तानां ॥

१८

वरदकरसरोजस्यन्दमानामृतौघ
व्युपशमितसमस्तप्रेतसंघाततर्षः ।
जयति सितगभस्तिस्तोमशुभ्राननश्रीः
सहजगुरुदयार्द्रालोकनो लोकनाथः ॥

रत्नकीर्त्तेः ॥

१९

प्रत्युप्ताढरयस्थिराकृतिघनध्मानभ्रमन्मन्दर
क्षुब्धक्षीरधिवीचिसंचयगतप्रालेयपादोपमः ।

[॥ हरिव्रज्या ॥]

२०

[देवि त्वं कुपिता त्वमेव कुपिता को ऽन्यः पृथिव्या गुरु *Shm I 276 (वाक्पतेः)
माता त्वं जगतां त्वमेव जगतां माता न विज्ञो ऽपरः। *Padyāī 283 (हरिहरस्य)
देवि][1] (fol 12a) त्वं परिहासकेलिकलहे ऽनन्तात्त्वमेवेत्यर्थं[2]
ज्ञातानन्तपदो नमज्जलधिजां शौरिश्चिरं पातु वः ॥

वाक्पतिराजस्य ॥

२१

को ऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगेणात्र किं For refs see Notes
कृष्णो ऽहं दयिते बिभेमि सुतरां कृष्णः कथं वानरः।
मुग्धे[4] ऽहं मधुसूदनो व्रज लतां तामेव पुष्पासवा
मित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु [व]ः॥

२२

मन्दक्वा[1]णितवेणुरह्नि शिथिले [सं]वर्तयन् गोकुलं
बर्हापीडकमुत्तमाङ्गरचितं गोधूलिधूम्रं दधत्।

---

२० [1] Fols 3–11 lost *Padyāī* begins राधे त्वं and otherwise diverges considerably [2] MS र्थं

२१ **Shm* I 277 (शुभकरस्य) *Sbhv* 104 (कस्यचित्) *Śp* 122 (कस्यचित्) *Aś ad* x 1 (anon) *At* p 49 (anon). **Subhās* II (13a) (anon) Hemac p 234 (anon) [1] MS प्रा [2] MS °ना, *Sbhv*, *Śp*, *Aś*, *At*, *Subhās*, Hemac °गस्मा [3] MS कुष्ठः, *Sbhv*, *Śp*, *At*, Hemac कृष्णादहं वानरात् [4] *At*, Hemac कान्ते [5] MS द [6] *Shm*, *Śp*, *Aś* पुष्पान्विता, *Sbhv*, *Subhās* तन्वीमले, *At*, Hemac मध्वन्विता, *Śp*, *Subhās* पिब for व्रज [7] *At* °र्विषयी [8] *Sbhv*, *Subhās*, Hemac तो

२२ [1] MS क्क

म्लायन्त्या वनमालया परिगतः श्रान्तो ऽपि रम्याकृति
र्गोपस्त्रीनयनोत्सवो वितरतु श्रेयांसि वः केशवः ॥

२३

विष्णोर्दानववाहिनीप्रमथनेच्छापूरणायादरा
दात्तः पाणियुगो हरेण करजश्रेण्या श्रियालम्भितः ।
निर्यातो वदनेन कुक्षिवसतेः पत्युस्तलादर्णसां
शङ्खः ऽपत्यपरंपरावृत इव श्रेयांसि पुष्णातु वः ॥

२४

स जयत्यादिवराहो दंष्ट्रानिष्पिष्टकुलगिरिकशेरुः ।
यस्य पुरः सुरकरिणः साङ्कुरमाषोपमा जाताः ॥

२५

Śp 81 (कस्यापि) Khandapraśasti 3 (5) (anon) *Sml B 8a (हनुमतः)

जीयासुः शकुलाकृतेर्भगवतः पुच्छच्छटाछोटना
दुद्यन्तः शतचन्द्रिताम्बरतलं ते बिन्दवः सैन्धवाः ।
यैर्व्यावृत्य पतद्भिरौर्वशिखिनस्तेजोजटालं वपुः
पानाध्मानवशादरोचकरुजश्चक्रे चिरस्यास्पदम् ॥

राजशेखरस्य ॥

२६

*Skm I 213 (वाक्पतेः)

कुतस्त्व (fol 12b) म[मु]कः[1] स्वतः स्वमिति किं न यत्कस्यचि
त्किमिच्छसि पदत्रयं[2] ननु भुवा किमत्यल्पया ।

---

२३ [1] MS च [2] MS हे (hi) [3] MS तुः [4] MS तिः
२४ [1] MS र
२५ [1] Khandap शफरा [2] Khandap, Śp ०जा च [3] Khandap, Śp ०राया
२६ [1] Skm ०मनु (सु, णु) कः [2] MS. here inserts ꣳ many times

द्विजस्य शर्मिनो मम त्रिभुवनं तदित्याशयो
हरे[2]र्जयति निह्नुतः प्रकटितश्च वक्रोक्तिभिः ॥

२७

श्रेयो ऽस्याश्चिरमस्तु मन्दरगिरेर्मा[1] घा[2]नि पार्श्वैरियं[3] Sm I 321
मावष्टम्भि महोर्मिभिः फणिपतेर्मा[4] लेपि लालाविषैः ।
इत्याकूतजषः श्रियं जलनिधेर्धौत्थितां पश्यतो
वाचो ऽन्तःस्फुरिता बहिर्विकृतिभिर्व्यक्ता हरेः पान्तु[5] वः॥

२८

चटच्चटिति[1] चर्मणि च्छमिति[2] चोच्छलच्छोणिते Sm I 197
धगिद्धगिति[3] मेदसि स्फुटरवो ऽस्थिषु[4] ष्टादिति । Śp 126
पुनातु भवतो हरेरमरवैरिनाथोरसि[5] Khandap 35 (41) (anon)
क्वणत्करजपञ्जरक्रकचकाषजन्मानलः ॥

वाक्पतिराजस्योमौ ॥

२९

वन्दे भुजभ्रमितमन्दरमथ्यमान
दुग्धाब्धिदुग्धकणविच्छुरितच्छवीकम् ।

---

२६ [1] MS स [2] MS र्हे
२७ [1] MS न्द्रि [2] MS र्घा [3] MS ॰श्वैरिय [4] MS मा
[5] MS तु
२८ [1] *Skm* क्व [2] *Skm* च्छ [3] *Skm*., *Śp*, *Khandap*
॰गद्ध [4] *Skm* स्फुटतरो, *Śp* स्फुटरवास्थिनि, *Khandap*
स्फुटरवो ऽस्थिनि [5] *Śp* ॰वक्षःस्थल; *Khandap* ॰वीरोरसि
[6] MS here inserts ꣸ three times [7] *Skm* ॰कोष (काष, काय)
अब्मा रवः, *Khandap* ॰घर्षजन्मानिलः
२९ [1] MS र्थ्य? [2] MS र्वि

नक्षत्रचक्र[1]वैरवियत्प्रतिरोधिनिन्द

दुन्निद्रकैरवतडागमुरो मुरारेः ॥

मुरारेः ॥

३०

*Skm IV 2 (चिरन्तनशरणस्य) *Sml P 152a (शरणैकस्य) Khandap 19 (anon)

भ्रमति गिरिराट् पृ[1]ष्ठे गर्जत्युपश्रुति सागरो[2]

दहति विततज्वाला[जा]लो[3] जगन्ति विषानलः ।

स तु विनिहितग्रीवाकाण्डः क[4]टाहपुटान्तरे[5]

स्वपिति भगवान् कूर्मो निद्राभरालसलोचनः ॥

३१

For reff see below

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी

ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये ।

लावण्यस्[1] म(fol 13a)हानिधी रसिकतां लक्ष्मीदृ[2]शो-
स्तन्वती

युष्माकं कुरुतां भवार्त्तिशमनं[3] नेत्रे तनुर्वा हरेः ॥

---

२९ [1] MS वै

३० [1] MS ष्ठू (?) [2] *Skm* also सागरे, *Khandap* ॰पर्यति सा॰ [3] *Skm* also तो [4] MS का [5] *Khandap* ॰तटोदरे

३१ *Sbhv* 43 (अमृतदत्तस्य) **Sml P* 6*b* (anon) **Sml B* 16*b* (अमृतदत्तस्य) **Padyāv* 2 (सारङ्गस्य) *Kāvyapr ad* IX 7 (anon) *At* p 50 (anon) *As.* p 159 (anon) *Kāvyaprad ad* IX 7 (anon) *Sāhityak ad* XI 8 (anon) **Subhās* I (5*a*) (अमृतदत्तस्य) *Rasagaṅg* p 774 (anon) **Sūktiratn* 41 (anon) Hemac p 228 (anon) [1] *Padyāv* ॰ण्यैकसुधा, *Sāhityak* ॰ण्यैकमहा [2] *Padyāv*, *Sāhityak* राधा [3] *Subhās* ॰हरणं, Hemac ॰शामिनी

३२

यस्मिन्नुद्धरति श्रुतीः पृथुतरो हूंकारसारध्वनि
र्मध्येसिन्धु वियन्मयो जलमयः स्तम्भस्त्वभूदम्बरे।
पुच्छोदस्तविसारिणो जलनिधेः स्वर्गङ्गया संगम
श्रद्धाहूतखलंत्पुरातनमुनिर्मीनो हरिः पातु वः॥

३३

जृम्भाविजिह्मितदृशः प्रथमप्रबुद्ध
लक्ष्मीकराम्बुरुहलालनलालसस्य।
गात्रार्पवृत्तिभरखर्वितशेषमव्या
द्व्याहतं मुरजितः कृतकप्रसुप्तं॥

३४

मयान्विष्टो धूर्तः स सखि निखिलामेव रजनी
मिह स्यादत्र स्यादिति निपुणमन्यामभिसृतः।
न दृष्टो भाण्डीरे तटभुवि न गोवर्धनगिरे
र्न कालिन्द्याः [कूले] न च निचुलकुञ्जे पुररिपुः॥

३५

श्यामोच्चन्द्रा स्वपिषि न शिशो नैति मामम्ब निद्रा *Skm 1 257 (शतानन्दस्य)
निद्राहेतोः शृणु सुत कथां कामपूर्वां कुरुष्व। *Padyāv 152 (सर्वानन्दस्य)
रामो नाम क्षि[तिपतिर]भून्माननीयो रघूणा
मित्युक्तस्य स्मितमवतु वो देवकीनन्दनस्य॥

---

३२ [1] In the MS pādas 3-4 precede 1-2 [2] MS रा [3] MS ने MS लु

३३ [1] MS य [2] MS ०तस्य

३५ [1] MS हि [2] MS त्तो [3] MS पू [4] Padyāv व्यक्तस्तस्मान्नरहरिरभूद्दानव दारयिष्यन्नित्युक्तस्य स्मितमुदयति०

३६

*Shm I 220 (वाक्पतिराजस्य) Khandap 49 (anon) Daśar ad IV 66 (anon)

खर्वग्रन्थिविमुक्तसंधिविक[1]सद्व[2]क्षःस्फुरत्कौ[3]स्तुभं
निर्यन्नाभिसरोजकुड्[4]मलकु (f 13b) [टीगम्भीर] सामध्वनि ।
पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं
पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्व[5]पुः ॥

३७

For ref see below

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलित[1]कवरीभारमंशं[2] वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालम्ब्य[3] नीतं वपुरलसलसद्बाहु लक्ष्म्या[4]ः पुनातु ॥

३८

*Shm I 326 (कस्यचित्)

संपूर्णः[1] पुनरभ्युदेति किरणैरिन्दुस्ततो दन्तिनः
कुम्भद्वन्द्वमिदं पुनः सुरतरोर्यो[2]ल्लसन्मञ्जरी ।
इत्थं यद्वदनस्तनद्वयवलद्रोमावलीषु भ्रमः
क्षीराब्धेर्म[4]थने ऽभवद्धिविषदां[3] लक्ष्मीरसावस्तु वः ॥

---

३६ [1] *Khandap* ख  [2] MS त्व  [3] MS त्को
[4] *Shm* ट्म  [5] MS व

३७ *Venīs* prol 6 (some MSS) **Shm* I 339 (वररुचेः) *Sbhv* 79 (भट्टनारायणस्य) *Śp* 135 (निशानारायणस्य) *Sarasvatīk ad* II 38, V 167 (anon.) *Vetālap* (Uhle) p 161 (anon) **S-Ratnak* I 125 (anon.) Hemac pp 176 and 314 (anon) [1] *Venīs* (some MSS) प्रशिथिल, *Vetālap* (one MS) विलुलित [2] *Venīs*, *Śp*, *Vetālap*, *S.-Ratnak*, *Sarasvatīk* शो Hemac (p 314) ०केशमसं [3] *Venīs*, *Sbhv*, *Śp*, *Vetālap*, *Sarasvatīk*, Hemac ०लिङ्गच, *S-Ratnak* ०रोप्य [4] MS ल्मा

३८ [1] MS र्ण [2] MS ०र्षेम (cf ver 29b) [3] MS टा (?)

३९

भभभ्रमंति[1] किं मही[2] लललल्बते चन्द्रमाः
कृकृष्ण ववद् द्रु[3]त हहहं[4]सन्ति किं वृष्ण्[5]यः ।
शिशीध्र मुमुमुञ्च मे[6] ववववक्तमित्यादिकं
मदस्खलितमालपन् हलधरः श्रियं[7] वः क्रियात् ॥

Skm I 25[illegible]
*S-Ratn
(100 anon)

पुरुषोत्तमदेवस्य ॥

४०

किं किं सिंहस्ततः किं नरसदृशवपुर्देव चित्रं गृहीतो[1]
नैवं तत्को ऽत्र जीव द्रुतमुपनय तं नन्वयं प्राप्त एव[2] ।
चापं चापं न खड्गं त्वरिततरमहो[3] कर्कशत्वं नखाना
मित्थं दैत्या[धिनाथं खरनखकुलिशैर्जघ्निवान्यः स वो
ऽव्यात् ॥

*Skm I 200
(श्रीव्यासपादानां)
*Khandap* 34
(28 anon,
*At* p 6, ll 4 sqq anon)
Hemac p 96
(anon)

४१

. . . . .] (fol 14*a*) धेनुदुग्धकलशानादाय गोप्यो गृहं
दुग्धे वष्कयिणीकुले पुनरियं राधा शनैर्यास्यति ।
इत्यन्[1]यव्यपदेशगुप्तहृदयः कुर्वन्विविक्तं[2] व्रजं
देवः कारणनन्दसूनुरशिवं कृष्णः स मुष्णातु वः ॥

---

३९ [1] MS भमि [2] *Skm*, *S-Ratnak* मेदिनी [3] MS द्रू [4] MS ह four times [5] *Skm* ष्ट [6] *Skm*, *S-Ratnak* पपपपानपात्रस्थितं [7] MS य

४० [1] MS गृहीलतो, *At* धृतः किं [2] *Skm* नैव धिक्को ऽत्र जीव . . . सो ऽपि संप्राप्त एव, *At* नैव कस्को ऽत्र जीवो . . . रे देव स . . ., *Khandap* नैतादृक्को ऽपि . . . मे देव . . . एष Hemac नैवेदृ° [3] MS. चि, *Skm* खड्ग झटिति हहहहा, *At* खड्गः किमिति हहहहा, *Khandap* न चापीत्वहहमहा [4] Text given from *At*, *Khandap* has °दैत्येन्द्रवक्षः खरनखरमुखैर्ज°, *Skm* मित्थेव दैत्यराजं निजनखकुलिशैर्जघ्निवान्सो ऽवताद्वः ॥ Hemac diverges widely in *b*-*d*

४१ [1] MS त्या [2] MS °वक्त

४२

*Skm I 296 (सोन्नोकस्य) *Padyāv 262 (साह्नोकस्य)

सत्रासार्त्तिं यशोदया प्रियगुणप्रीतेक्षणं राधया
लग्नै[1]र्बल्ल[2]वसूनुभिः सरभसं संभावितात्मो[3]र्जितैः ।
भीतानन्दितविस्मितेन विषमं[4] नन्देन चालोकितः
पायाद्वः करमूर्ध[5]सुस्थितमहाशैलः सलीलो हरिः ॥

सोन्नोकस्यैतौ ॥

४३

*Skm I 201 (दक्षस्य) Śp 4066 (हनुमतः) Khandap 37 (anon )

दंष्ट्रासंकटवक्त्रकन्दरतरज्जिह्वाभृतो हव्यभु[1]
ज्ज्वालाभासुरभूरि[2]केशरसटाभारस्य दैत्यद्रुहः ।
व्यावल्गद्बलवद्धिरण्यकशिपुं[3]क्रोडस्थलीपाटनं[4]
स्पष्ट[5]प्रस्फुटदस्थिपञ्जरखरा नखाः पान्तु वः ॥

वाकपते. ॥

४४

*Skm I 292

लक्ष्म्या[1]ः केशप्रसव[2]रजसां बिन्दु[3]भिः सान्द्रपातै[4]
रुद्घूर्णश्रीर्घ[5]ननिधुवनक्लान्तिनिद्रान्तरेषु ।
दोर्दण्डोऽसौ जयति [जयि]नः शार्ङ्गिणो मन्दराद्रि
ग्रावश्रेणीनिकषम[6]सृणक्षुण्णकेयूरपत्त्रः ॥

श्रीभगीरथस्य ॥

---

४२ [1] *Skm*, *Padyāv* न [2] MS र्स [3] MS त्मौ [4] MS म [5] *Skm*, *Padyāv* पद्म

४३ [1] *Skm* °घर्घरलल्लज्जि°, *Khandap* °जिह्वस्य हव्याशन, *Śp* °न्द्ललल्लज्जिह्वस्य हव्याशन [2] MS रि [3] MS पु [4] *Khandap*, *Śp* °स्थलास्फालन, *Skm* °पाटल [5] *Khandap* स्फार

४४ [1] MS च्छा [2] *Skm* र [3] MS दे (*dr*) [4] MS ते [5] MS °रभ्यर्षशीर्घ [6] MS म

४५

नखक्रकचदारणस्फुटितदैत्यवक्षःस्थल   [illegible] P[illegible] nd[illegible] ud[illegible] 141 [illegible] = I 72
क्षरत्क्षतजनिर्भरप्रतिविभावितस्वाकृतेः ।
हरेरपरकेशरिक्षुभितचेतसः पातु वः
सरोष . .²ताधरभ्रुकुटिभङ्गभीमं मुखम् ॥

वाकपतिराजस्य ॥

४६

वत्स क्ष्माधरगह्वरेषु विचरञ्चारप्रचारे गवां
हिंस्रान्वीक्ष्य पुरः पुराणपुरुषं नारायणं ध्यास्यसि ।
इत्युक्तस्य यशो(f 14b)[दया मु¹]ररिपो[र]व्याज्जगन्ति स्फुर
द्बिम्बोष्ठद्वयगाढपीडनवशादव्यक्तभावं स्मितम् ॥

४७

देवो हरिर्जयति यज्ञवराहरूपः
सृष्टिस्थितिप्रलयकारणमेकमेव ।
यस्योदरस्थितजगत्त्रयबीजकोश
निर्गच्छदङ्कुरशिखेव विभाति दंष्ट्रा ॥

सोन्नोकस्य ॥

४८

बीजं ब्रह्मैव देवो मधु जलनिधयः कर्णिका स्वर्णशैलः   *Skm I 314
कन्दं नागाधिराजो वियदति[वि]पुलः पत्त्रकोषावकाशः । (हलायुधस्य)

---

४५ ¹ MS स्वरच   ² Two aksaras lost (वलि ?)

४६ ¹ Three aksaras lost, the last partly   ² द्व has here in the MS the later form   ³ The conjunct has here in the MS an unusual (later) form

४७ ¹ MS भी

४८ ¹ MS त्थि   ² *Skm* न्द्रो   ³ *Skm* °दपि विपुलः

द्वीपाः पत्त्राणि मेघा मधुपकुलममूस्तारका[1] गर्भधूली
यस्यैतन्नाभिपद्मं[2] भुवनमिति स वः शर्म देवो ददातु[3] ॥

मालायुधस्य ॥

४९

Sarasvatīk ad III 36 (anon), and v 138 (anon) *Sml P 3a *S-Ratnak VI, 55 (anon)

कनकनिकष[1]स्वच्छे रा[धा]पयो[2]धरमण्डले
नवजलधरश्यामामात्मद्युतिं[3] प्रतिबिम्बि[4]ताम् ।
असितसिचयप्रान्तभ्रान्त्यां[5] मुहुर्मुहुरुत्क्षिप
ञ्जयति जनितव्रीडानम्र[6]प्रिया[7]सहितो[8] हरिः ॥

वैद्दोकस्य ॥

---

४८ [1] Skm °भूत्ता and °मस्ता (B sic) [2] Skm यं
[3] Skm धा

४९ [1] Sarasvatīk, Sml P, S-Ratnak °कलश [2] MS य
[3] MS ते (tim) [4] MS म्ब [5] MS न्त्या ? [6] Sarasvatīk, Sml P °हास: [7] MS °मुः प्रे (pri) [8] Sarasvatīk, Sml P, S-Ratnak °हसि

## ॥ सूर्यव्रज्या ॥

५०

यस्याधोधस्तथोपर्युपरि निरवधि भ्राम्यतो विश्वमश्वै Hemac p 14 (anon)
रावृत्तालातलीलां रचयति रयतो मण्डलं तिग्म[1]धाम्नः ।
सो ऽव्यादुत्तप्तकार्तस्वरसरलशरस्पर्धिभिर्धामदण्डै
रुद्दण्डैः[2] प्रापयन्वः प्रचुरतमतमःस्तोममस्तं समस्तम् ॥
राजशेखरस्य ॥

५१

शु[क]तुण्ड[1]च्छवि सवितुश्चण्डरुचः पुण्डरीकवनबन्धोः । *Skm 1 8 (विद्यायाः) Śp 86 (नागम्यायाः) *Sūktirat 12 (anon)
मण्डलमुदितं वन्दे[2] कुण्डलमाखण्डलाशायाः ॥

५२

तुङ्गोदयाद्रिभुजगेन्द्रफणोपलाय *Skm 1 6
व्योमेन्द्रनीलतरुकाञ्चनप(fol 15a)ल्लवाय ।
संसारसागरसमुत्क्रमि[1]योगिसार्थे[2]
प्रस्थानपूर्ण[3]कलशाय नमः सवित्रे[4] ॥
वराहमिहिरस्य ॥

---

५० [1] Hemac चण्ड [2] MS ॰रूद्ध
५१ [1] MS ॰तणु [2] MS here inserts a danda.
५२ [1] MS म [2] MS र्वे [3] MS र्ण [4] MS ते

५३

*Sūryaśataka* 34.

संसक्तं सिक्तमूलादभिनवभुवनोद्यानकौतूहलिन्या[1]
[यामिन्या] कन्ययेवामृतकरकलशावर्जितेनामृतेन ।
अर्कालोकः क्रियाद्वो मुदमुदयशिरश्चक्रवालालवाला
दुद्यन् बालप्रवालप्रतिमरुचिरहःपादपप्राक्प्रवालः[2] ॥

मयूरस्य ॥

---

५३ [1] MS. तु. [2] *Sūryaś.* °रोहः.

॥ वसन्तव्रज्या ॥

५४

आरक्ताङ्कुरदन्तुरा कमलिनी नायामिनी [यामिनी] *Skm II 761
स्तोकोन्मुक्ततुषारमम्बरमणेरीषत्प्रगल्भं महः ।
अप्येते[1] सहकारसौरभमुचो वाचालिताः कोकिलै
रायान्ति [प्रिय]विप्रयुक्तयुवतीमर्मच्छिदो वासराः ॥

सर्वश्रियः ॥

५५

नैवैके वयमेव[1] कोकिलवधूकण्ठोच्चरत्पञ्चम
स्थानोद्बोधितपञ्चमार्गणगुणास्फालेन रोमाञ्चिताः ।
पश्यैते तरवो [ऽपि] सुन्दरि जरत्पत्त्रव्ययानन्तरो
ज्जिह्मापाटलकोटिसंपुटदलप्रादुर्भवत्कुड्मलाः ॥

विनयदेवस्य ॥

५६

मलयमहीधरपवनः कलकण्ठकलध्वनिर्निकुञ्जलताः ।
उत्कलिका उत्कलिकाश्चेतसि जनयन्ति लोकस्य ॥

श्रीकण्ठस्य ॥

५७

न प्रहितो नवः प्रियसखीवर्गेण बद्धस्पृह
श्चित्तेनोपहृतः[1] स्मराय न समुत्स्रष्टुं[2] गतः पाणिना ।

---

५४ [1] MS ॰प्ये ऽते
५५ [1] MS नैवेके वयत्म [2] MS यु
५७ [1] Two aksaras lost, read कान्तेन? [2] MS प

आमृष्टो मुहुरीक्षितो मुहुरभिघ्रातो मुहुर्लोठितः
प्र. . . . .[3] (fol 15b):कृतो मृगदृशा किं किं न चूताङ्कुरः ॥

वाङ्कूटस्य ॥

५८

श्लिष्टैः कोकिलया रुतं चिचतुरैश्चूताङ्कुरैरुन्नतं
कोषान् बिभ्रति किंशुका मधुकरश्रेणीजुषः पञ्चषान्।
क्वापि [क्वा]पि महाकुलाकुलतया कान्तापराधग्रह
ग्रन्थिच्छेदसमुद्यतं च हृदयं दोलायते सुभ्रुवाम् ॥

नीलस्य ॥

५९

*Skm II 756 Sarasvatīk ad III 28 (anon) Kāvyakalpalatā, p 175 (anon) *Sml P 153a (वसुकस्य)

जम्बूनां कुसुमोदरेष्वतिरसादाबद्धपानोत्सवाः
कीराः पक्वफलाशया मधुकरीश्चुम्बन्ति मुञ्चन्ति च ।
एतेषामपि पश्य किंशुकतरोः पत्त्रैरभिन्नत्विषां
पुष्पभ्रान्तिभिरापतन्ति सहसा चञ्चूषु भृङ्गाङ्गनाः ॥

राजशेखरस्य ॥

६०

Anargharāghava v 6 *Sml B 190a

दृश्यन्ते मधुमत्तकोकिलवधूनिर्धूतचूताङ्कुर
प्राग्भारप्रसरत्परागसिकतादुर्गास्तटीभूमयः ।

---

५७ [1] MS घा [2] MS धि ? [3] Five aksaras lost in MS [4] MS का

५८ [1] MS यु [2] MS स्ता [3] MS ते

५९ [1] *Sarasvatīk*, *Sml P* °मोत्करे नवमधून्या°, *Kāvyakalp* °मोद्गमे [2] *Skm*, *Sarasvatīk* °रब्ध [3] MS श्च or स्च, *Sml P* श्विलन्ति (*sic*); *Kāvyakalp* स्विन्वन्ति [4] MS या [5] *Sarasvatīk* नीलकिंशुकदलैरेभिः समानत्विषां, *Sml P* जातकिं°, *Kāvyakalp* जातकिंशुकदलश्रेणीसमानत्विषां [6] *Kāvyakalp* °भ्रान्तिभृतः, *Sml P* °भृतः पतन्ति मधुपाश्च°

६० [1] MS से (si)

याः कृच्छ्रादभि[1]लङ्घ्य लुब्धकभयात्तैरेव रेणूत्करै
र्धारावाहिभिरास्त लुप्तपदवीनिःशङ्कमेणीकुलम् ॥

मुरारेः ॥

६१

अशिथिलपरिष्पन्दः कुन्दे तथैव मधुव्रतो
नयनसुहृदो वृं[1]क्षाश्चैते न कुड्मलशालिनः ।
दलति कलिका चैौं[2]ती नास्मिंस्तथा मृगचक्षुषा
मथ च हृदये मानग्रन्थिः स्वयं शिथिलायते ॥

६२

कान्तां हित्वा विरहविधुरारम्भखेदालसाङ्गी[1]
मामुल्लङ्घ्य व्रजतु पथिकः को ऽपि यद्यस्ति शक्तिः ।
इत्याशोकी जगति सकले वल्लरी चीरिकेव
प्राप्तारम्भे कुसुमसमये कामदेवेन दत्ता ॥

६३

मन्दं दक्षिणमाह्वय(fol 16a) न्ति पवनं पुंस्कोकिलव्याहृतैः *Śkm II 762 (कस्यचित्)
संस्कुर्वन्ति वनस्थलीः किसलयोत्तं[1]सैर्नि[2]षण्णालिभिः ।
चन्द्रं सुन्दरयन्ति मुक्ततुहिनप्रावारया ज्योत्स्नं[3]या
वर्धन्ते च विवर्धयन्ति च मुहुस्ते ऽमी स्मरं वासराः ॥

६० [1] *Anargh* (ed *Kāvyamālā*) ति
६१ [1] MS नृ [2] MS ञ्चौ
६२ [1] MS ङ्गौ
६३ [1] MS त्त [2] MS न्नि [3] MS त्स्न

६४

हृद्यस्निग्धैः[1] परभृतरुतैर्मुक्तदीर्घप्रवासः
प्रत्यावृत्तो मधुरिति वदन्दक्षिणो गन्धवाहः ।
शिञ्जल्लोलभ्रमरवलयः[2] काननालीवधूनां
सद्यः कुन्दस्मितबृहतिकाः पूर्णपा[3]चीकरोति ॥

६५

लोलैः कोकिलमण्डलैर्मधुलिहां[1] चंचूर्यमाणैर्गणै
र्नीरन्ध्रैर्गृहवाटिकापरिसरेष्वङ्गारितैः किंशुकैः ।
प्रारब्धे तिमिरे वसन्तसमयक्षोणीपतेर्भ्राम्यतः
प्रस्निग्धा परितो धृतेव कलिकादीपावलिश्चम्पकैः ॥

मनोविद‍श्चैतौ ॥

६६

*Aucityavicāracarcā ad* ? 26 (मालवकुवलयस्य)
Vamana *ad* III 2 ? (anon)
Hemac pp 134 and 197 (anon)

च्युतसुमनसः[1] कुन्दाः पुष्पोद्गमेष्वलसा[2] द्रुमा[3]
मनसि च गिरं ग्रथ्नन्तीमे[4] किरन्ति न कोकिलाः ।
अथ च सवितुः[5]शीतोल्लासं लुनन्ति मरीचयो
न च जठरतामालम्बन्ते[6] क्लमोदयदायिनीम् ॥

६७

*Vrddhas* I 25
**Skm* II 767
Hemac p 134 (anon)

साम्यं संप्रति सेवते विचकिलं[1] षाण्मासिकैर्मौक्तिकै
र्बाह्लीकीदशनव्रणारुणतलैः[2] पत्रैरशोकोऽर्चितः[3] ।

---

६४ [1] MS ग्धै [2] MS च [3] MS ॰र्णप्रा

६५ [1] MS हा

६६ [1] MS सेः [2] *Auc* ॰मैर [3] MS ॰लिना
[4] *Auc*, Vām गृह्ण, acc to Vām the original reading was मलयमरुतः सर्पन्तीमे विमुक्तधृतच्छदाः । [5] MS ॰चित्तः [6] MS च

६७ [1] MS ल [2] *Skm* ॰चलैः, corrected to ॰तरैः, *Vrddhas* ॰तरैः [3] *Vrddhas* ॰कश्चि

[भृङ्गाल]ङ्घितकोटि किंशुकमिदं किंचिद्विवृन्तायते
माञ्जिष्ठैर्मुकुलैश्च पाटलितरोरन्यैव काचिल्लिपिः ॥

६८

गर्भग्रन्थिषु वीरुधां सुमनसो मध्येङ्कुरं पल्लवा V Haus I 23
वाञ्छामा(fol 16b)[चपरि]ग्रहः पिकवधूकण्ठोदरे पञ्चमः। *Shm II 751
किं च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो *Snd B 110a
देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ॥ At p 67 (anon)

Hemac p 1.4 anon

राजशेखरस्यैतौ ॥

६९

शीतार्त्तैरिव भग्नशैशिरनिशाभागैरहः स्फायते
गर्भे बिभ्रति किंशुका इव दिशां तापाय वह्न्यङ्कुरम्।
किं च स्वाश्रयसंभृतप्रथिमसु च्छायातपाङ्गेष्वयं
लोकः स्तोकरसो ऽद्य न क्वचिदपि स्वच्छन्दमानन्दति॥

त्रैलोचनस्य ॥

७०

उद्भिन्नस्तवकावतंससुभगाः प्रेङ्खन्मरुन्नर्तिताः
पुष्पोद्गीर्णपरागपांशुललसत्पत्त्रप्रकाण्डत्विषः।
गम्भीरक्रमपञ्चमोन्मदपिकस्थानोच्छलद्गीतयः
प्रत्युज्जीवितमन्मथोत्सव इव क्रीडन्त्यमी भूरुहः ॥

---

६७ [1] *Vrddhaś* also ०लम्बि, in the MSS लघि can be read [2] *Vrddhaś* माञ्जिष्ठै. स्तवकैश्च [3] MS या [4] *Shm* ०वृन्तैव०

६८ [1] *At* छाया [2] MS ०स्मा (?) म Hemac and *At* have चिरेप्सितं

६९ [1] MS र्भे

७० [1] MS च [2] MS था

७१

प्रागेव जैत्रमस्त्रं सहकारलता स्मरस्य चाप[1]भृतः ।
किं पुनरनल्पनिपतितमधुकरविषकल्कलेपेन ॥

शुभाङ्गस्य ॥

७२

स्वस्ति श्रीमलयाचलात्स्मरसखः श्रीमान्वसन्तानिलः
क्रीडावेश्मसु कामिनः कुशलयत्येतच्च[1] वक्तीतरत् ।
एषो ऽहं मुदितालिकोकिलकुलं कुर्वन्वनं प्राप्तवा
न्युष्माभिः प्रियकामिनीपरिगतैः स्थातव्यमस्मादिति॥

७३

*Skm II 771 (कस्यचित्)

एते नूतनचूतकोरकघनग्रासातिरेकीभव
त्कण्ठ[2]ध्वानजुषो हरन्ति हृदयं मध्येवनं कोकिलाः ।
येषामक्षिनिभेन भान्ति भगव(fol 17a)द्भूतेशनेत्रा[3]नल
ज्वालाजालकरालितासमशराङ्गारस्फुलिङ्गा इमे[5] ॥

७४

Śp 3794 (विज्जकायाः)
*Sml P 90b ( ,, )
*Sml. B 111a ( ,, )
*S -Ratnak III 352 (anon.)

किंशुककलिकान्तर्गतचन्द्रकलास्पर्धि[2] केशरं भाति ।
रक्तनिचोलकपिहितं धनुरिव जतुमुद्रितं वितनोः ॥

व[3]ज्जणस्य ॥

---

७१ [1] MS राय
७२ [1] MS र्त्व
७३ [1] MS नृ [2] *Skm* ण्ठ and ण्ठे [3] MS त्रो
[4] MS स [5] *Skm* इव
७४ [1] *Śp*, *S -Ratnak*, *Sml* (*P* and *B*) °र्गतमिन्दु [2] MS (?) (*rddhi*) [3] MS र्ज

७५

वाप्यो दन्तुरितोदराः कमलिनीपत्त्राङ्कुरग्रन्थिभि
श्चूतानां कलिकामिलन्मधुलिहां क्वापि स्थितिर्वर्तते ।
दौर्भाग्योपनयाय सांप्रतमपांमल्यो ऽपि मार्गश्रमः
शिक्षामुल्ललितुं ददाति रजसां गन्त्रीपथे मारुतः ॥

अभिनन्दस्य ॥

७६

आरक्तैर्नवपल्लवैर्विटपिनो नेत्रोत्सवं तन्वते
तान्धुन्वन्नयमभ्युपैति मधुरामोहो मरुद्दक्षिणः ।
तेनालिङ्गितमात्र एव विधि[ना] प्रादुर्भवन्निर्भर
क्रीडाकूतकषायितेन मनसा लोको ऽयमुन्माद्यति ॥

७७

काप्यन्या मुकुलाधिकारमिलिता लक्ष्मीरशोकद्रुमे
माकन्दः समयोचितेन विधिना धत्ते ऽभिजातं वपुः ।
किं चा।पाटा।गिरेरनङ्गविजयप्रस्तावनापण्डितः
स्वैरं सर्पति बालचन्दनलतालीलासखो मारुतः ॥

७८

वह्निर्मन्ये हिमजलमिषात्संश्रितः किंशुकेषु *Skm II 768 (कस्यचित्)
व्यामं धूमैः स खलु कुरुते काननं कोरकाख्यैः ।

७५ [1] MS या ?
७६ [1] MS वि [2] MS sic (for द्दो ?) [3] Aksara omitted
७७ [1] MS मे (mi) [2] MS सो [3] The MS has after a mark of correction Concerning the reading of this upt passage see the note ad loc [4] MS स्वं
७८ [1] Skm °भया

संतापार्थं कथमितरथा पान्थसीमन्तिनीनां
पुष्पव्याजाद्विसृजति शिखाश्रेणिमुद्गाढशोणीम्[3] ॥

यौतायनेः ॥

७९

श्रोण्यां चित्रः कुरुवकगुणः कर्णयोर्मुग्धचूतं
रक्ताशोकं प्रणयि कुचयोर्माधवी मू[र्ध (fol 17b) जे][1]षु ।
सर्वाङ्गीणो बकुलरजसा पिञ्जरेणोपरागः
स्त्रैणो[2] यूनां भवतु रतये वेशसर्वाभिसारः[3] ॥

सावर्णेः ॥

८०

मुग्धा ताम्रैर्नवकिशलयैः संभृतोदारशोभं
प्रादुर्भूतभ्रमरसरणीयौवनोद्भेदचिह्नम् ।
सीमन्तिन्यः कुसुमधनुषा बद्धसख्यस्य मासः
स्निग्धस्मेरैर्मुखमधिगुणं दृष्टिपातैः पिबन्ति ॥

वागुरस्य ॥

८१

शिलीमुखैरद्य मनोज्ञपक्षै
र्विषोपलेपादिव[1] कज्जलाभैः ।
नितान्तपूर्णा[2] मुचकुन्दकोषा
विभान्ति तूणा इव मन्मथस्य ॥

७८ [1] MS कः for कथ [2] These two aksaras are mutilated [3] *Skm* णा and णी

७९ [1] Two aksaras partly lost [2] MS स्त्रे [3] MS ति (?)

८१ [1] MS लो [2] MS र्णं

८२

स्नेहं स्रवन्ति तरवः पञ्चापि क्षिपति मार्गणान्मदनः ।
परिमुक्तकण्ठरोधः परपुष्टः स्मरति माधुर्यम् ॥

श्रीधर्मकरस्य ॥

८३

संकुचिता इव पूर्वं दुर्गा[1] इव तुषारजनितजडिमानः ।
संप्रत्युपरमितहिमे क्रमशो दिवसाः प्रसारजुषः ॥

श्रीधरणीधरस्य ॥

८४

दुःश्लिष्टदुर्लक्ष्यपलाशसंधी
न्यापाटलाग्राणि हरिन्ति मूले[1] ।
कुशेशयानां शुकशावभांसि
प्रादुर्बभूवुर्नवकुलङ्मानि ॥

८५

उपनयति कपोले लोलकर्णप्रवाल
क्षणमुकुलनिवेशान्दोलनव्यापृतानाम् ।
परिमलितहरिद्रान् संप्रति द्राविडीनां
नवनखपदति[1]क्तानातपः स्वेदबिन्दून् ॥

योगेश्वरस्य ॥

---

८३ [1] MS र्गाः, followed by a र, which was intended for an otiose mark following the blank square round the hole in the leaf [2] MS ज्ज

८४ [1] The MS here inserts the sign ꣸ many times

८५ [1] MS भि

८६

सद्यस्तप्तो भ्रमति रजनीं वासवः खण्डयित्वा
क्षीणक्षीणा तदनु भजते सापि सम्यक्प्रसादम् ।
एको . . . . . . .
. . . . . . . .

[॥ ग्रीष्मव्रज्या ॥]

८७

. . . . . . . .

. . (fol 19a) वर्जितमुग्धवातहरिणश्रेणीपरीतान्तिकाः।
औत्सुक्यं जनयन्ति पान्थपरिषद्घर्माम्बुबिन्दूत्कर
व्याक्षेपक्षममन्दमन्दमरुतो मार्गस्थलीपादपाः ॥

८८

चञ्चच्चञ्चुगणोदरैः शिथिलितप्रायांसमुत्पक्ष्मल
न्यञ्चत्पक्षपुटावकाशम . . त्याश्वोष्मभिर्नीयते[1]।
जङ्घाकुञ्चनलब्धनीडनिविडावष्टम्भकष्टोज्झित
क्षेपीयःपवनाभिघातरभसोत्क्षेपैरहः पक्षिभिः ॥

८९

धास्यत्यद्य सितातपत्त्रसुभगं सा राजहंसी शिशोः
स्मेराम्भोरुहवासिनोऽपि शिरसि स्नेहेन पक्षद्वयम्।
तृष्णार्त्तः शुकशावकोऽपि सुतनोः पीनस्तनासंगिनीं
मुक्ताहारलतां तदङ्कवसतिस्तोयाशया पास्यति ॥

९०

भुवां घर्मारम्भे पवनचलितं तापहृतये
पटच्छन्नाकारं[1] वहति[2] गगनं धूलिपटलम्। *Skm II 781 (भवभूतेः)

---

८८ [1] Two aksaras omitted, read °त्पार्श्वौ ?

९० [1] *Skm* (A) °च्छाया [2] *Skm* व (A), र (B)

अमी मन्दाराणां द्[1]वदहनसंदेहितधियो
न टौ[2]कं[3]न्ते पातुं झटिं[4]ति मकरन्दं मधुलिहः ॥

९१

*Skm II 792
(कस्यचित्)

अपां कू[1]ले लीनं क्षणपरिचितं चन्दनरसे
मृणालीहारादौ कृतलघुपदं चन्द्रमसि च ।
मुं[2]हूर्तं विश्रान्तं सरसकदलीकाननतले[3]
प्रियाकण्ठाश्लेषे निवसति परं[4] शैत्यमधुना ॥

९२

प्रान्तारक्तनिलोचनाञ्चलदरीव्ययाल्पमक्षीभय
प्रोद्भूतोभं[1]यशृङ्गकोटिविग[लङ्घू]वालवल्लीसखैः ।
पाथोबिन्दुभिरक्षिसंधिषु शनैः संसिच्यमानः सुखं
मग्नो वारिणि दूरनिःसहतया निद्रायते सैरिभः ॥

९३

तापं स्तम्बेरमस्य प्रकटयति करः शीकरैः ..[1] (fol 19b) नुदन
पङ्काङ्कं पल्वलानां वहति तटवनं माहिषैः कायकाषैः ।
उत्ताम्यत्तालवश्च प्रतं[2]पति तरणानां[3]शवी तापतन्द्री
मद्द्रि[4]द्रोणीकुटीरे कुहरिं[5]णि हरिणा रात्रयो यापयन्ति ॥

---

९० [1] *Skm* द्र (A), द (B) [2] *Skm* ढौ [3] MS का
[4] MS टे (*ti*)

९१ [1] *Skm* मू [2] MS मू [3] *Skm* ले (A), टे ? (B)
[4] *Skm* निविशति (B निवसति) पद

९२ [1] MS भं

९३ [1] Three aksaras almost entirely lost ? read श्रोणिमु
[2] Corrected from ति [3] MS वा [4] MS द्रा [5] MS रे (*ri*)

९४

• डाः[1] पान्थनखंपचाः प्रचयिनो गन्त्रीपथे पांशवः
कासारोदरशेषमम्बु महिषो मथ्नाति ताम्यन्निमि।
†हष्टिर्धावति धातकीवनमसूक्तर्षेण[2]† तारक्षवी
कण्ठान् बिभ्रति विष्कराः शरशमीनीडेषु नाडीधमान्॥

वाणस्यौभौ॥

९५

सुभगसलिलावगाहाः पाटलिसंसर्गसुरभिवनवाताः। Śāntala 3
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः॥

कालिदासस्य॥

९६

अये तप्तजला नितान्त[1]शिशिरा मूले मुहुर्बाहुभि
र्व्यामथ्योपरतप्रियेषु पथिकैर्मार्गेषु मध्यंदिने।
आधाराः प्लुतबालशैवलदलच्छेदा[व]कीर्णामयः
पीयन्ते हलमुक्तमग्नमहिषप्रक्षोभपर्याविलाः॥

योगेश्वरस्य॥

९७

मृद्भूयिष्ठतया गुरून् परिहरन्नारण्यकान् गोमयान्
वल्मीकान्[1]पगूहति प्रशिथिलं ज्वालाभिरुद्बल्वजान्।
वह्नि†मीतं†[2]किलिञ्जसंचयसमुत्सिक्तश्चरन् कानने
प्रस्निग्धानिह विष्किराण्डकललानाज्याशया लुम्पति॥

तस्यैव॥

---

९४ [1] Read वाताः? [2] MS ष्णो [3] Read गृष्टि (or सृष्टि)
. . सूक्तर्षेण?
९६ [1] MS ला [2] MS यद्दि
९७ [1] MS मु or सु? [2] MS °मींड? For बींढ?

९८

दूरीभूतशरारि विक्लवबकं .[1] कान्तकारण्डवं
क्लाम्यत्कङ्कमचक्रवाकममिलन्मद्गुप्रपातप्लवम्[2] ।
क्लिष्टं[3]क्रौञ्चमधार्तराष्ट्रमपतत्कोयष्टि[4] निष्टीटिभं
सीदत्सारसमप्रसक्तकुररं कालेन जातं (fol 20a)सरः ॥
तस्यैव ॥[5]

९९

*Skm II 787 (मधुरशीलस्य) तोयोत्तीर्णाः श्रयति कवरीः शेखरः[1] सप्तलानां
शैत्यं सिञ्चत्युपरि कुचयोः पाटलाकण्ठदाम ।
कान्तं कर्णावभिनिविशते कोमलाग्रं शिरीषं
स्त्रीणामङ्के विभजति तपस्तच[2] तच्चात्मचिह्नम् ॥
मधुशीलस्य ॥

१००

शुकपत्त्रहरितकोमलकुसुमसटानां शिरीषयष्टीनाम् ।
तलमाश्रयति दिनातपभयेन परिपिण्डितं शैत्यम् ॥
वागुरस्य ॥

१०१

Vıddhaś IV 4 *Skm II 794 हरन्ति[1] हृदयानि यच्छ्वणशीतला वेणवो
यदर्घति[2] करम्बिता शिशिरवारिणा[3] वारुणी ।
भवन्ति च हिमोपमाः स्तनभुवो यदेणीदृशां[4]
शुचे[5]रुपरि संस्थितो रतिपतेः प्रसादो गुरुः ॥

---

९८ [1] One aksara lost, read प्रक्रान्त or निष्क्रान्त ? [2] MS व [3] MS ष्टे [4] MS को [5] The words सर. . . . व are inserted above l 1 of 20a

९९ [1] *Skm* °त्तीर्णा . . कवरी शेखर [2] MS य

१०१ [1] Corrected from हार or हरि [2] *Vıddhaś* र्द and र्घ [3] *Vıddhaś* also °वायुना [4] *Vıddhaś* also शो [5] *Vıddhaś* त्व

१०२

जलार्द्राः[1] संव्यानं[2] बिसकिसलयैः[3] केलिवलयाः *Viddhaś* IV 3
शिरीषैरुत्तंसो[4] विचकिलमयी हाररचना ।
शुचावेणाक्षीणां मलयजरसार्द्राश्च तनवो
विना तन्त्रं मन्त्रं रतिरमणमृत्युंजयविधिः ॥

१०३

रजनिविरमयामेष्वादिशन्ती रतेच्छां *Viddhaś* IV 2
किमपि कठिनयन्ती नारिकेलीफलाम्भः ।
अपि[1] परिणमयित्री राजरम्भाफलानां
दिनपरिणतिरम्या[5] वर्तते ग्रीष्मलक्ष्मीः ॥

एते राजशेखरस्य ॥

१०४

अम्भोधेर्जलयन्त्रमन्दरपरिस्पन्दे ऽपि निद्राणयोः *Skm II 784 (कस्यचित्)
श्रीनारायणयोर्घनं विघटयत्यूष्मा समालिङ्गनम् ।
किं चोत्तप्तविय (fol 20b) त्कपालफलके कङ्कालशेषश्रियं
चन्द्रं मर्मरयन्ति पर्पटमिति क्रूरा रवेरंशवः ॥

नारायणलक्ष्मेः ॥

---

१०२ [1] *Viddhaś* also द्र [2] *Viddhaś* also श्रम्याणां
[3] MS कै [4] *Viddhaś* सा [5] MS च [6] MS धा
१०३ [1] *Viddhaś* च [2] MS स [3] *Viddhaś* also नालिकेरी
[4] *Viddhaś* also यि [5] *Viddhaś* °भोग्या and °योग्या
[6] ष्म, the aksara is partly lost
१०४ [1] *Skm* धि [2] MS न्दि [3] MS र्यं [4] *Skm*
पर्पटवर or वक [5] MS °रक्ष

## ॥ प्रावृड्व्रज्या ॥

१०५

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः
पर्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जा[1]लकैः ।
उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनितः
प्राग्भारेषु शिखण्डिताण्डवविधौ मेघैर्वितानाय्यते ॥

१०६

फलभरपरिणामश्यामजम्बूनिकुञ्ज
स्खलिततनुतरङ्गामुत्तरेण श्र[1]वन्तीम्[2] ।
उपरि विघटमानं[3]प्रौ[4]ढतापिच्छनीलः
श्रयति शिखरमद्रेर्नू[5]तनस्तोयवाहः ॥

१०७

जृम्भाजर्जरडिम्ब[डम्ब]रघनश्रीमत्कदम्बद्रुमाः
शैलाभोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः ।
उद्यत्कुन्दलकान्तकेतकभृतः कच्छाः सरिच्छ्रोतसा
माविर्गन्धंशिलीन्ध्रंलोध्रकुसुमस्मेरा वनानां ततिः ॥

---

१०५ [1] MS ज्ञा

१०६ [1] *Mālatīm* स्र [2] MS न्ती: [3] *Mālatīm* °मानः and उपचितघनमाल [4] MS प्रो [5] MS नु

१०७ [1] MS भा [2] *Mālatīm* माविर्भूत, MS मानवि° with न deleted [3] MS न्द्र

१०८

उत्फुल्लार्जु[1]नसर्ज[2]वासितवहत्पौरस्त्यझंझामरु *Mā a ii* b
त्प्रेङ्खोलस्खलितेन्द्रनीलशकल[4]स्निग्धाम्बुदश्रेणयः ।
धारासिक्तवसुंधरासुरभयः प्राप्तास्त एते ऽधुना[5]
घर्माम्भोविगमागमव्यतिकरश्रीवाहिनो वासराः ॥

भवभूतेरमी ॥

१०९

एणी याति विलोक्य बालशलभान् शष्पाङ्कुरादित्सया
छत्त्रीकुड्म[2]लकानि रक्षति चिराद्दण्डभ्रमात्कुक्कुटी ।
धूत्वा धावति कृष्णां[3]कीटप (fol 21a) टलश्रेणीं शिखण्डी शिरो
दूरादेव वं[4]नान्तरे विषधरग्रासाभिलाषातुरः ॥

११०

आसारान्तमृदुप्रवृत्तमरुतो मेघोपलिप्ताम्बरा *Shm II 826 (कस्यचित्)
विद्युत्पातमु[2]हूर्तदृष्टककुभः सुप्तेन्दुताराग्रहाः ।
धाराक्लिन्नकदम्बसंभृतसुरा[3]मोदोद्वहाः [4]प्रोषितै
र्निःसंपातविसारिदर्दुररवा नीताः कथं रात्रयः ॥

योगेश्वरस्य ॥

१११

दात्यूहध्वनिभाञ्जि वेत[1]सशिखासुप्तोरगाणि ध्वन *Shm II 816 (योगेश्वरस्य)
त्कादम्बानि कुरङ्ग[2]यूथकलितस्तूपान्युदम्भांसि[3] च ।

---

१०८ [1] MS र्जे [2] MS यौ [3] *Mālatīm* also झञ्झानिल [4] *Mālatīm* also °वलय [5] *Mālatīm* also त एवाधुना

१०९ [1] MS ता [2] MS °चीकुड्म [3] MS ष [4] MS च

११० [1] Corrected from म्वा [2] MS मू [3] *Shm* °सभृत-सुधा, MS सम्भृ° [4] *Shm* also ह्रो (A)

१११ [1] MS तु or त्त [2] MS ज्ञ [3] MS °म्भान्सि

तीराग्रद्य पिपीलिकासमुदयावर्जज्जटालोलप
व्याघ्रान्युन्मदकुक्कुभानि सरितां कुर्वन्ति लोलं मनः ॥

११२

कान्तां क्वापि विलम्बिनीं कलरुतैराहूय [चेत[1]]स्ततो
दिग्भागानवलोक्य रङ्गवसुधामुत्सृज्य पङ्क्तां ततः ।
एष स्फारमृदङ्गनादमधुरैरम्भोमुचामारवै
र्बर्हश्रेणिकृतातपत्त्ररचनो हृष्टः शिखी नृत्यति ॥

११३

पीताम्भःस्तिमिताः सृजन्ति सलिलान्याबद्धधारं घना
स्तद्धाराध्वनिमीलितानि नयनान्यभ्येति निद्रागमः ।
निद्रामुद्रितलोचने प्रतिगृहं मूकायमाने जने
निर्बन्धोच्चरदुच्चदर्दुररवैः कोलाहलिन्यो निशाः ॥

११४

धारानि[पात[1]]रवबोधितपञ्जरस्थ
दात्यूहडम्बरकरम्बितकण्ठकूजाः ।
अट्टेषु काण्डपटवारितशीकरेषु
धन्याः पिबन्ति मुखतामरसं वधूनाम् ॥

११५

शैलश्रेणिरपेतदावदहना द (fol 21b) . . .[2] †टधनं†
जीमूताङ्कुरदन्तुरा दश दिशो भूरेणुमुक्तं नभः ।

११२ [1] Aksaras omitted [2] MS ष [3] MS ब॰ [4] MS न्त्र ?
११३ [1] MS द्रि
११४ [1] Aksaras lost [2] MS सी
११५ [1] MS ॰रथेरत॰ [2] Aksaras lost [3] MS न्त

किं चान्यत्कलिकोर्मिमेदुरसुखी जाता कदम्बच्छवि
श्छिद्यन्ते कियता क्षणेन शिखिनां मौनव्रतग्रन्थयः ॥

११६

केदारे नववारिपूर्णजठरे किंचित्क्वणद्दर्दुरे
शम्बूकाण्डकपिण्डपाण्डरततप्रान्तस्थलीवीरणे ।
डिम्भा दण्डकपाणयः प्रतिदिशं पङ्कच्छटाचर्चिता
श्चुभ्रूश्चुभ्रूरिति भ्रमन्ति रभसादुद्घायिमत्स्योत्सुकाः ॥

११७

समन्ततोविस्फुरदिन्द्रनील
मणिप्रभाविच्छुरितान्तरालः ।
मर्त्यावतीर्णस्य विडोजसोऽयं
नीलांशुकच्छत्त्रमिवाम्बुवाहः ॥

११८

खद्योतच्छुरितान्धकारपटलाः स्पष्टस्फुरद्विद्युतः *Skm II 827 (कस्यचित्)
स्निग्धध्वानविभावितोरुजलदोद्वाहा रटत्कप्लवः ।
एता केतकभेदवासितपुरोवाताः पतद्धारयो
न प्रत्येमि जनस्य यद्विरहिणो यास्यन्ति सोढुं निशाः ॥

११९

एतस्मिन्मदजर्जरैरुपचिते कम्बूरवाडम्बरैः *Skm II 807 (वातोकस्य)
स्तैमित्यं मनसो दिशत्यनिभृतं धारारवे मूर्छति ।

---

११६ [1] MS व [2] MS द्वि [3] MS च्च
११७ [1] MS त्र
११८ [1] *Skm* ध्वा
११९ [1] *Skm* also °म्बरा (B) [2] *Skm* °धरे

उत्सङ्गे[1] ककुभो विधाय रसितैरम्भोमुचां घोरय
न्मन्ये मुद्रितचन्द्रसूर्यनयनं व्योमापि निद्रायते ॥

१२०

गम्भीराम्भोधराणामविरणनिपतद्वारिधारानिनादा
नीषन्निद्रालसाक्षा दृढगृहपटलाल्लढकुष्माण्डवल्शाः[1]।
दोर्भ्यामालिङ्ग्यमाना जलधरसमये पत्त्रषण्डे निशायां
धन्याः शृण्वन्ति सुप्ताः स्तनयुगभरितोर . . . . . . ॥

१२१

. . . . . . . .

. . . . . . . .

. . . (fol 23*a*) वोदये ऽद्य जलदव्यालो[ल]पुच्छच्छद
च्छत्त्रच्छादितमौलयो दिशि दिशि क्रीडालसाः केकिनः ॥

१२२

गायति हि नीलकण्ठो नृत्यति[1] गौरी तडित्तरलतारा।
आस्फालयति मृदङ्गं तदनु घनो ऽयं महाकालः ॥

१२३

अलकेषु चूर्णभासः स्वेदलवाभान् कपोलफलकेषु।
नवघनकौतुकिनीनां वारिकणान् पश्यति कृतार्थः ॥

---

११९ [1] *Shm* also (A) तत्संगे, MS °ङ्के [2] *Shm* नि
[3] MS has मुद्रियते
१२० [1] *Sic* MS (or ह्यः ?)
१२१ [1] MS न्त्र ? [2] MS न
१२२ [1] MS ते (*ti*)

१२४

काले वारिधराणामपतितया नैव शक्यते स्थातुम् । Sāhityad
उत्कण्ठितासि तरले न हि न हि सखि पिच्छिलः पन्थाः ॥ p 288 (anon)

१२५

असितभुजगशिशुवेष्टितमभिनवमाभाति केतकीकुसुमम्।
आयसवलयालंकृतविषाणमिव दन्तिनः पतितम् ॥

१२६

स्तम्बेषु के[2]तकीनां यथोत्तरं वामनै[3]र्दलैरद्य ।
विदल[4]न्ति मेषत[5]र्णक[क]च्छच्छविकेशराः सूच्यः ॥

१२७

धूलीभिः केतकीनां परिमलनसमुद्धूलिताङ्गः समन्ता
दन्तोद्वेल्लद्बलाकावलिकुणपशिरो[1]नद्धनीलाभ्रकेशः ।
प्रेङ्खद्विद्युत्पताकावलिरुचिरधनुःखण्डखट्वाङ्गधारी
संप्राप्तः प्रोषितस्त्रीप्रतिभयज[2]नकः कालकापालिको ऽयम्॥

१२८

मेघश्यामदिशि प्रवृत्तधनुषि क्रीडत्तडित्तेजसि
छन्नाहर्निशि गर्जितप्रमनसि प्रम्लानलीलाकपि ।
पूर्णश्रोतसि शान्तचातकतृषि व्यामुग्धचन्द्रत्विषि
प्राणान् पान्थ कथं दधासि निवसन्नेतादृशि प्रावृषि ॥

---

१२६ [1] MS सु [2] MS ल [3] MS ने [4] MS न [5] MS भ ?

१२७ [1] MS म [2] This akṣara is partly effaced

१२९

For riff see below

क्षपां[1] क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं[2] सर्वां[3] वनगहनमुच्छाद्य[4] (fol 23b) सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति समन्वेषणपरा[5]
स्तडिद्दीपालोकैर्दि[6]शि दिशि चरन्तीव[7] जलदाः ॥

१३०

*Skm II 830 (कस्यापि)

विद्युद्दीधितिभेदभीषणतमःस्तोमान्तराः संतत
श्यामाम्भोधररोध[1]संकटवियद्विप्रोषितज्योतिषः ।
खद्योतानु[2]मितोपकण्ठतरवः[3] पुष्णन्ति गम्भीरता
मासारोदकमत्तकीटपटलीक्वाणोत्तरा रात्रयः ॥

अभिनन्दस्य ॥

१३१

हर्षोल्ला[1]सितचारुचन्द्रकबृहद्बर्है[2]र्वनानाममी
जाताः पुष्पितबालशाखिन इवाभोगा भुजङ्गाशिभिः ।

---

१२९ *Skm II 812 (श्रीकण्ठस्य) Sbhv 1765 (पाणिनेः) Śp 3869 (पाणिनेः) *Sml B 119b (पाणिने) *Sabhyāl VI 24b (पाणिनेः) Padyaracanā XI 35 (पाणिनेः) *S-Ratnak III 55 (anon) [1] Sbhv, Śp ०पाः [2] MS रे (??) [3] MS र्थ्यो [4] Sbhv, Śp, Sabhyāl, Padyarac कृत्वा तद्‌-गहनमुच्छोष्य, S-Ratnak ०मुच्छुष्य (!), Skm सर्वा . . . मुत्साद्य [5] Sbhv समालोकन, Śp, Sabhyāl, S-Ratnak, Padyarac तदन्विषण [6] Sbhv, Śp ०का दि [7] MS न्ती, Sbhv, Śp चरन्तीह, Skm तरन्तीव and चरन्तीव, Sabhyāl चलन्तीव

१३० [1] MS वोधय, Skm ०वाधस [2] Skm ०तोन्न [3] Skm also न (B)

१३१ [1] MS र्षा [2] MS है

स्पृष्टाः कोटरनिर्गतार्धतनुभिः पातुं पयोदानिलं
निर्यद्वंशकरीरकोटय इव क्षोणीभृतो भोगिभिः ॥

शतानन्दस्य ॥

१३२

एताः पङ्किलकूलरूढनलदस्तम्ब[1]क्वणत्कम्[2]बवः *Skm II 817 (परमेश्वरस्य)
क्रीडत्कर्कटचक्रवालविचल[3]ज्जम्बालतोयाविलाः ।
हृल्लेखं जनयन्त्यनूपसरि[4]तामुत्तुण्डगण्डूपदो
त्कीर्णक्लिन्न[5]मृदो नदस्थ[6]पुटितप्रान्तास्तटो[7]भूमयः ॥

योगेश्वरस्य ॥

१३३

नवे धारा[1]सारे प्रमदचटुलायाः स्थलजुषो
वराटीशुभ्रायाः शफरसरणेरेभिरुपरि ।
कुलीरैर्भ्रा[2]म्यद्भिर्गणयितुमिव व्यापृतकरा
मनः क्रीणन्तीव[3] प्रकटविभवाः पल्वलभुवः ॥

अभिषेकस्य ॥

१३४

विन्ध्याद्रि[1]महालिङ्गं स्न[2]पयति पर्जन्यधार्मिकः शुचिभिः ।
जलदेन्द्रनीलगण्डू[3]षतो[4]ज्झितैः संप्रति पयोभिः ॥

---

१३२ [1] *Skm* म्बाः [2] MS क्व or च [3] *Skm* °विलस
[4] MS रे [5] *Skm* त्कीर्णोद्गीर्ण [6] *Skm* °दर्बुदस्थ [7] MS टा
१३३ [1] MS चा [2] MS र्भ्र [3] MS च
१३४ [1] MS °न्ध्याद्रि [2] MS स्व [3] MS ग्र [4] MS ज्झि

## [॥ मदनव्रज्या ॥]

१३५

. . . . . . . .

. . . . . . . .

(fol 31*a*) . . . . . .

. राः प्रीतिरती इति क्व महिमा कामस्य नालौकिकः ॥

मनोविदस्याम् ॥

१३६

*Vṛddhaś* I 1
**Skm* I 469
*Śp* 3077 (anon )
**Sml B* 7*b*
**Sabhyāl* I 12 (anon )

कुलगुरुरमराणां[1] केलिदीक्षाप्रदाने[2]
परमसुहृदनङ्गो रोहिणीवल्लभस्य ।
अपि कुसुमपृ[3]षत्कै[4]र्देवदेवस्य जेता
जयति सुरत[5]लीलानाटिकासूत्रधारः ॥

राजशे[6]खरस्य ॥

१३७

**Skm* I 466 वन्दे देवमनङ्गमेव रमणीनेत्रोत्पलच्छद्मना[1]
पाशेनायति[2]शालिना सुनिबिडं संय[म्य लोकत्र]यम् ।
येनासावपि भस्मला[3]ञ्छिततनुर्देवः कपाली बलात्
प्रेमक्रुद्धनगात्मजाङ्घ्रि[4]विनतिक्रीडाव्रते दीक्षितः ॥

ललितोकस्य ॥

---

१३६ [1] *Skm* , *Śp* , *Sml B* , *Sabhyāl* , *Vṛddhaś* ॰रबलानां [2] *Śp* ॰प्रबन्धे [3] MS पू [4] MS त्के [5] *Sabhyāl* मदन [6] MS से

१३७ [1] MS द्मा corrected to द्म [2] MS त [3] *Skm* ना [4] MS ॰आह्रि

१३८

स जयति सं[1][कल्पभवो रति]मु[2]खशतपत्त्रचुम्बनभ्रमरः । Kuttanimata v 1 Cf Vetālap xxiv (p 202 of Uhle's ed)
यस्यानुरक्तललनानयनान्तविलोकितं[3] वसतिः[4] ॥
दामोदरगु[5]प्तस्य ॥

१३९

अहो धनुषि नैपुण्यं मन्मथस्य . . . .[1] ।
[शरी]रमक्षतं कृत्वा भिनत्त्यं[2]न्तर्गतं मनः ॥

१४०

धनुर्माला मौर्वी क्व[1]णदलिकुलं लक्ष्यमबला *Skm i 470 (कस्यचित्)
मनो भेद्यं शब्दप्रभृतयः इमे पञ्च विशिखाः । Sbhv 82 (घण्टकस्य)
[2]इया[ञ्जेतुं य]स्य त्रिभुवन[मदेहस्य विभवः *Subhās ii (10a) (anon )
स वः कामः कामान्दिशतु दयितापाङ्गवसतिः ॥] Hemac p 16 (anon )

---

१३८ [1] MS स [2] MS सु [3] *Kutt* ०न्तविलोकनं, MS विलोकिलोकित [4] MS ते (*ti*) [5] स्य is here erased in the MS

१३९ [1] Read जयैषिणः or सुधन्विनः ? [2] MS स्य

१४० [1] *Skm* च [2] Reading of *c-d*, as in *Skm* So also *Sbhv* and *Subhās* (with, however, स कामः कामान्वो) and Hemac (इयज्जे०) The MS passes, *viâ* reminiscence or homœoteleuton, from इया . . . . स्य to ll *c-d* of the verse

[जयति स मदलेखोच्छृङ्खलप्रेमवामा *Skm i 463
ललितसुरतलीलादैवत पुष्पचापः ।]
त्रिभुवनजयसिद्धौ यस्य शृङ्गारमूर्त्तेर्
रुपकरणमपूर्वं मान्मिन्दुर्मधूनि ॥
उत्पलराजस्य ॥

१४१

*Skm. I. 465 (वल्लनस्य).

याच्यो न कश्चन गुरुः प्रतिमा च कान्ता
पूजा विलोकनविगूहनचुम्बनानि[1][2] ।
आत्मा (fol. 31b) निवेद्यमितरव्रतसारजेत्री[3]
वन्दामहे मकरकेतनदेवदीक्षाम् ॥

वल्लणस्य ॥

१४१ [1] *Skm.* नि. [2] MS. गु. [3] *Sic* (for जै ?).

## ॥ वयःसंधिव्रज्या ॥

१४२

भ्रुवोः काचिल्लीला परिणतिरपूर्वा नयनयोः
स्तनाभोगो[1] ऽव्यक्तस्तरुणिमसमारम्भसमये ।
इदानीं बालायाः कि[2]ममृतमयः किं मधुमयः
किमानन्दः साक्षाद्ध्वनति मधुरः पञ्चमकलः[3] ॥

Skm II 7 (राजोकस्य)
Śp 3274 (कस्यापि)

वीर्यमित्रस्य ॥

१४३

उन्ना[1]ला[लकभ[2]]ञ्जनानि कवरीपाशेषु शिक्षारसो
दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः ।
तिर्यग्[3]लोचनचेष्टितानि वचसि[4] च्छेकोक्तिसंक्रान्तयः
स्त्री[णां स्नायति शै[5]]शवे प्रति[6]कलं[7] कोऽप्येष केलिक्रमः ॥

Vidahas II 5
Bālar III 23

१४४

विध[1]त्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा
तथापि प्रागल्भ्यं किमपि चतुरं लोचनयुगे ।
यदाद[त्ते दृश्यादखि[2]]लमपि भावव्यतिकरं
मनोवृत्तिं द्रष्टुः[3] प्रथयति च दृश्यं प्रति जनम् ॥

Vidahas II (after) 13, III (after) 21, IV 8

एतौ राजशेखरस्य ॥

---

१४२ [1] Skm, Śp ०गो व्य [2] MS कि [3] Skm इदानीमेतस्याः कुवलयदृशः प्रत्यहमयं नितम्बस्याभोगो नयति मणिकाञ्चीमधिकतां ॥ Śp as our MS, with किं विषमयः (c) and पञ्चमरवः (d)

१४३ [1] MS न्ना [2] Aksaras lost [3] Bālar ०वर्ति [4] Bālar सा [5] Aksaras lost [6] MS ते (ti) [7] Bālar प

१४४ [1] MS ध (?) [2] Aksaras lost [3] MS ष्ट., Viddhaś. मनोवृत्तिर्द्रष्टु मुखरयति

१४५

एतद्दधाति[1] नवयौवननर्तकस्य
कश्मीरजच्छुरित[2]तालकयुग्म . . ।
. .[3] समुच्छ्वसितवृत्ति मनागुपान्ते
लब्धात्मसीम कुचकुड्म[4]लयुग्ममस्याः ॥

१४६

यौवननगरारम्भे रामाहृदयस्थलीषु कुसुमेषोः ।
म[1]करपताकेवेयं राजति रोमावली रम्या ॥

[॥ तरुणीव्रज्य ॥]

१४७

*Viddhas* III 16
**Skm* II 544 (राजशेखरस्य)
**Sabhyāl* III 77 (ditto)
*Pracandap* 27

[कण्ठे मौक्तिकमालिकाः स्तनतटे[1] कार्पूरमच्छं[2] रजः
सान्द्रं चन्दनमङ्गके वलयिताः[3] पाणौ मृणालीलताः ।
तन्वी नक्त[4]मियं चकास्ति तनु[5]नी चीनांशुके बिभ्रती
शीतांशोरधिदेवतेव ग] (f 36a) लिता व्योमाग्रमारोहतः[6]

१४८

लीलास्खलच्चरणचारुगता[गता[1]]नि
तिर्यग्विवर्तितविलोचनवीक्षितानि ।
वामभ्रुवां मृदु च मञ्जु च भाषितानि
निर्मायमायुधमि[दं[2]] मकरध्वजस्य ॥

---

१४५ [1] MS ते (*ti*) [2] MS ता [3] Four aksaras lost read युग्मशोभा । किंचित् ? [4] MS द्म १४६ [1] MS ऋ
१४७ [1] *Pracandap* मौक्तिकदाम गण्डतलयो. [2] *Skm* च्छं [3] *Skm* ता., *Pracandap* विचकिलस्रक्शेखरो मूर्धनि [4] *Pracandap* बाढमि [5] *Skm*, *Sabhyāl* शुचि, *Pracandap* तरु [6] *Pracandap* व्योम्नि द्रुत गच्छतः
१४८ [1] Two aksaras omitted [2] Aksara omitted

१४९

दृष्टा काञ्चनय[1]ष्टिरद्य नगरोपान्ते भ्रमन्ती मया
तस्यामद्भुतपद्ममेकम[2]निशं प्रोत्फुल्लमालोकितम् ।
तत्रोभौ मधुपौ तथोपरि तयोरेको ऽष्ट[3]मीचन्द्रमा
स्तं[4]स्याग्रे परिपुञ्जितेन तमसा नक्तंदिवं स्थीयते ॥

*Shm II 17 (रे [वे ?] तोकस्य)

१५०

मध्येहेमलतं कपित्थयुगलं प्रादुर्बभूव क्रम
प्राप्तौ तालफलद्वयं[1] तदनु तं[2]न्निःसंधिभावस्थितम् ।
पश्चात्तुं[3]ल्यसमुन्नतिव्यतिकरं सौ[4]वर्णकुम्भद्वया
कारेण स्फुटमेव यत्परिणतं क्वेदं[5] वदामो ऽद्भुतम् ॥

*Shm II 16 (रेतोकस्य)

श्रीवित्तोकस्यै[6]तौ ॥

१५१

स्मितज्योत्स्नालिप्तं मृगमदमसीपं[1]त्त्रहरिणं
मुखं तन्मुग्धाया हरति हरिणाङ्कस्य लडितम् ।
क्व चन्द्रे सौन्दर्यं तदधररुचिः[2] सातिशयिनी
क्व बालायास्ते ते क्व चटुलकटाक्षा नयमुषः ॥

यागोकस्य ॥

१५२

आश्चर्यमूर्जितमिदं किमु किं मदीय
श्चित्तभ्रमो यदयमिन्दुरनम्बरे ऽपि ।

---

१४९ [1] MS ष [2] *Shm* ०द्भुतमेकपद्मम [3] MS ष्ट or ष्त (*sta*) [4] MS त

१५० [1] MS य [2] *Shm* ०द्वय तद्भव [3] MS तु [4] MS सो [5] MS म [6] MS स्वै

१५१ [1] MS य [2] MS ०रुचिरः

तत्रापि कापि ननु चित्रपरंपरेय
मुज्जृम्भितं कुवलयद्वितयं यदत्र ॥
श्रीहर्षपालदेवस्य ॥

१५३

*Skm II 347
*Sml P 106b
(गोड्थोइक-
विराजयोः)
*Sml B 132b
(गो जस्य)
Sāhityad
p 253 (anon)

निजनयनप्रतिबिम्बैरम्बुनि[1] बहुशः प्रतारिता कापि ।
नीलोत्पले ऽपि विमृशति[2,3] करमर्पयितुं कुसुमलावी[4] ॥
धरणीधरस्य ॥

१५४

यौवनशिल्पसुकाल्पितनूतनतनुवेश्म विशति[1] (fol 36b)
रतिनाथे ।
लावण्यपल्लवाङ्कौ मङ्गलकलशौ स्तनावस्याः ॥

१५५

Śp 3347
(कस्यापि)
*Sabhyāl I
114 (anon)
*S-Hārāv C
148 (anon)

एकमेव बलिं बद्ध्वा[1] जगाम हरिरुन्नतिम् ।
अस्यास्त्रिबलिबन्धेन[2,3] सैव मध्यस्य नम्रता ॥

१५६

*Skm II 381
(कस्यचित्)

रोमावली कनकचम्पकदामगौर्या
लक्ष्मीं तनोति नवयौवनसंभृतश्रीः ।
त्रैलोक्यलब्ध[1]विजयस्य मनोभवस्य
सौवर्णपट्ट[2]लिखितेव जयप्रशस्तिः ॥

---

१५३ [1] *Sml P* सत्सु   [2] MS ष   [3] *Sml P* र्ष
[4] *Sml P* पुरः पत्युः
१५४ [1] MS ते (*ti*)
१५५ [1] MS द्धा   [2] *Sabhyāl* त, *Śp* and *S-Hārāv* have तन्व्यास्त्रि°.   [3] MS स्त्रि
१५६ [1] *Skm* also (B) °बद्ध   [2] MS ट्ट (*tta*)

१५७

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे[2] वामलोचनाः ॥

Fur reff see below

१५८

सो ऽयमभ्युदितः पश्य प्रियाया मुखचन्द्रमाः ।
यस्य पार्वणचन्द्रेण तुल्यतैव हि लाञ्छनम् ॥

१५९

विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम् ।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥

Ratnāv II 35 Sbhv 1513 *Sml B 93b

श्रीहर्षदेवस्य ॥

१६०

मैकं तमःस्तवकमूर्ध्वमपाकृथास्त्व
मे[णं] त्यजास्य विमले नयने[4] गृहाण ।
लोलालकं तरलवीक्षितमायताक्ष्याः
साक्षान्मुखं यदि भवाननुकर्तुकामः ॥

*S Hārāv C 85 bis (anon)

---

१५७ *Viddhaś* I 2 **Skm* II 107 (राजशेखरस्य) **Sml B* 61a (राजशेखरस्य) **Saml* 1 (anon) *Sbhv* 1309 (कस्यापि) *Śp* 3078 (क्षेमेन्द्रस्य) **Sabhyāl* I 17 (राजशेखरस्य) **S-Ratnak* v 40 (anon) Hemac pp 139, 172 (anon) *Kuvalay ad* v 101 (anon) *Sāhityad* p 259 (anon) *Kāvyapr ad* x 53 (anon) *At* p 44 (anon) *As* p 138 (anon) *Al* p 408 (anon) *Rasagang* p 729 (anon)
[1] MS या [2] *Kāvyapr*, *Sāhityad* स्तुमो [3] *As* चारु

१६० [1] MS म [2] MS र्ड [3] MS या [4] *S-Hārāv* नयने विपुले [5] *S-Hārāv* ह [6] MS र्त्त

१६१

एतस्मिन्नवदातकान्तिनि कुचद्वन्द्वे कुरङ्गीदृशः
संक्रान्तप्रतिबिम्बमैन्द[1]वमिदं द्वेधा विभक्तं वपुः ।
आनन्दात्तरलस्य पुष्पधनुषस्तत्कालनृत्योत्सव
प्राप्तिप्रोद्यतकांस्यतालयुगलप्रायं समालोक्यते ॥

वसुकल्पस्य ॥

१६२

घना[1]वूरू तस्या यदि यदि विदग्धो ऽयमधरः
स्तनद्वन्द्वं[2] सान्द्रं यदि यदि मुखाब्जं विजयते ।
हतौ रम्भास्तम्भौ हतमहह बन्धूककुसुमं
हतौ हेम्नः कुम्भावहह विहतः पार्वणशशी ॥

१६३

*Shm* II 561 यदपि (fol 37*a*) विबुधैः सिन्धोरन्तः कथंचिदुपार्जितं
*Sml P* 77*b* तदपि सकलं चारु स्त्रीणां मुखेषु विभाव्य[1]ते ।
(भासस्य) सुरसुमनसः श्वासामोदे शशी च कपोलयो
*Sml B* 94*a* (भोजदेवस्य) रमृतमधरे तिर्यग्भूते विषं[च विलोच]ने ॥

लक्ष्मीधरस्य ॥

१६४*

तरलनयना तन्वङ्गीयं पयोधरहारिणी
रचनपटुना मन्ये धात्रा शशिद्रवनिर्मिता ।

---

१६१ [1] MS न [2] MS यु
१६२ [1] MS वृ [2] MS न्द्व [3] MS द्दे (*di*)
१६३ [1] *Sml P* °लोक्य

भवतु महिमा लावण्यानामयं कथमन्यथा
विगलित[तनु]र्लेखाशेषः कथं च निशाकरः ॥
सुवर्णरेखस्य ॥

१६५

सो ऽनङ्गः कुसुमानि पञ्च विशिखाः पुष्पाणि बाणासनं[1] *Shm II 108
स्वच्छन्दच्छिदुरा मधुव्रतमयी पङ्क्तिर्गुणः का[र्मुके] ।
एवंसाधन उत्सहेत स जगज्जेतुं कथं मन्मथ
स्तस्यामोघममूर्भवन्ति न हि चेदस्त्रं कुरङ्गीदृशः ॥
अमरसिंहस्य ॥

१६६

गुरुतां जघनस्तनयोः स्रष्टुमु . . . . . . . लितवतः ।
मुग्धाङ्गुलिसंधिव[य]निर्गतलावण्यपङ्क्तिला त्रिवली॥

१६७

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं [कन्दर्पं जननयन]निर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥
भवभूतेः ॥

Malatīm x 29
Sarasvatīk ad I 135 (anon )
Padyāvalī XIII 9

१६८

त्वद्गण्डस्थलपाण्डु देहि लवलं देहि त्वदोष्ठारुणं *Shm II 70
बिम्बं देहि नितां[बनि त्वदलकश्या]मं च मे जाम्बवम् । (वाक्कूटस्य)

---

१६४ [1] Or ०रुचि ? [2] MS का
१६५ [1] *Shm* also वाणीसम [2] *Shm* एतत्सा [3] MS स्त
१६६ [1] *Sic* MS (for मग्ना ?) [2] MS त्रि

इत्यक्षुस्वमनोज्ञचाटुजनितव्रीडः पुरन्ध्री[1]जनो
धन्यानां भवनेषु पञ्जरशुकैराहारमभ्यर्थ्यते ॥

वाक्कूटस्य ॥

१६९

दूर्वाश्यामो जयति . . . . . . . . . . . . . (fol 37b) कपोलः
कस्तूरीभिः किमिह लिखितो द्राविडः पत्त्र[1]भङ्गः ।
प्रत्यग्राणि प्रियकररुहक्रीडितान्येव मुग्धे
शोभाभाञ्जि स्तनकल[श]योस्तन्वि हारो ऽपि भारः ॥

वीर्यमित्त्र[2]स्य ॥

१७०

*Sarasvatīk ad I 73, v 170 (anon)*
[जनः पुण्यैर्याया][1]ज्जलधिजलभावं जलमुच
स्तथावस्थं चैनं विदधति[2] शुभैः शुक्ति[3]वदने ।
ततस्तां श्रेयोभिः परिणतिमसौ विन्दति[4] यया
रुचिं तन्वन् पीनस्तनि[5] हृ[दि तवायं विलुठति ॥][6]

अचलसिंहस्य ॥

१७१

*Skm II 480 राजशेखरस्य)*
न नीलाब्जं चक्षुः सरसिरुहमेतन्न वदनं
न बन्धूकस्येदं कुसुम[1]मधरस्तद्द्युतिधरः ।
ममाप्यत्र भ्रान्तिः प्रथममभवद्भृ[ङ्ग] किमु ते
कृतं यत्नैरेभ्यो विरम विरम भ्राम्यसि मुधा[2] ॥

---

१६८ [1] MS सु

१६९ [1] MS त्त्व [2] MS त्र

१७० [1] Six aksaras lost in MS [2] *Sarasvatīk* तु [3] MS त्ति (*kti*) [4] *Sarasvatīk* तु [5] MS न [6] Aksaras lost in MS

१७१ [1] *Skm* मुकुल [2] *Skm* विरमेत्यञ्जलिरिय ॥

१७२

मनसिजविजयास्त्रं[1] नेत्रविश्रामपात्रं
तव मुखमनुकर्तुं[2] तन्वि वाञ्छा द्वयोश्च ।
इति जनितविरोधे . . . . दिवायं
हरति तुहिनरश्मिः पङ्कजानां विकाशम् ॥

धर्मकरस्य ॥

१७३

चेतोभुवो रचितविभ्रमसंविधानं
नूनं न गोचरमभूद्दयिताननं वः ।
तत्कान्तिसंपद[म]वाप्स्यत चेच्चकोराः
पानोत्सवं किमकरिष्यत चन्द्रिकासु ॥

१७४

यन्नीयते जगति शस्त्रहता व्रजन्ति
नूनं सुरालयमिति स्फुटमेतदद्य । *Sbhv* 1544 (कस्यापि)
सूच्यग्रमात्रपरिखण्डितवि[ग्रहे]ण
प्राप्तं[1] यतः[2] स्तनतटं तव[3] कञ्चुकेन ॥

१७५

अनेन कुम्भद्वयसंनिवेश
संलक्ष्यमाणेन कुचद्वयेन ।
उन्मज्जता यौवनवारणेन
वापीव तन्वङ्गि तरङ्गितासि ॥

भागुरस्य ॥

---

१७२ [1] MS स्त [2] Read वैरिभावा° ?
१७४ [1] MS प्तो [2] MS त [3] *Sbhv* खलु

१७६

(fol 39a) नित[म्ब]श्रीः कं न स्वगतमितयानं जनयति
स्तनाभोगो मुग्धे हृदयमपरस्यापि हरति ।
तवाक्ष्णो ऽपभ्रष्टं[1] स्मरकरशरेन्दीवरदलं
मुखं तद्यस्येन्दुः प्रथमलिखनप्रोञ्छनपदम् ॥

वल्लणस्य ॥

१७७

*Shm II 379 (राजशेखरस्य) सजन्मानौ तुल्यावभिजनभुवाजन्म[1] च सह
प्रवृद्धौ नाम्ना च स्तन इति समाना[2]वुदयि[3]नौ ।
मिथः सी[4]मामात्रे यदिदमनयोर्मण्डलव[5]तो[6]
रपि स्पर्धायुद्धं[7] तदिह हि नमस्यः कठिनिमा[8] ॥

भावाकदेव्याः ॥

१७८

शृङ्गारद्रुममञ्जरी सुखसुधासर्वस्वनिक्षेपभूः
सर्गाभ्यासफलं विधेर्मधुमयी वर्तिर्जगच्चक्षुषाम् ।
लीलानिर्झरिणी[1] मनोजनृपतेर्लावण्यसिन्धोरियं
वेला कस्य मृगेक्षणा सुकृतिनः सौन्दर्यसीमास्थली ॥

हिमाङ्गस्य ॥

---

१७६ [1] MS ०भष्ट (sta)

१७७ [1] *Shm* ०वपि जनितुराजन्म (A) and ०जनिभृता जन्म (B sic) [2] MS स (?) सानानि with नि deleted [3] MS ०दुपि [4] MS here inserts ꣸ five times [5] *Shm* भृ [6] MS here inserts ꣸ four times [7] *Shm* सद्धोत्तुत्व [8] *Shm* नमस्या कठिनता

१७८ [1] MS ०निञ्झरे (ri) ण्य [2] MS ञ्चो

१७९

किमियमॅमृतवृष्टिः किं नु लावण्यसिन्धुः
किमथ नलिनलक्ष्मीः किं नु शृङ्गारवल्ली ।
इति नवहरिणाक्ष्याः कान्तिमालोचयन्तो
जगदखिलमसारं भा लोचयामः ॥

१८०

स्मितज्योत्स्नाधौतस्फुरदधरपत्त्रं[1] मृगदृशां[1]
मुखाब्जं चेत्पीतं तदलमिह पीयूषकथया ।
अहो मोहः को ऽयं शतमखमुखानां सुमनसां
यदस्यार्थे ऽत्यर्थं जलधिमथनायासमविशन् ॥

१८१

एतल्लोचनमुत्पलभ्रमवशात्पद्मभ्रमादाननं
भ्रान्त्या[1] बिम्बफलस्य चाजनि दधन्नामाधरो [वे]धसा ।
तस्याः सत्यमनङ्गविभ्रमभुवः प्रत्यङ्गमासङ्गि(f 39b)नी
भ्रान्तिर्विश्वसृजो ऽपि यत्र कियती तत्रास्मदादेर्मतिः ॥

वीर्यमित्रस्य ॥

१८२

आनीलचू[चु]कशिलीमुखमुद्रितैक — Sbhv 1545 (कस्यापि)
रोमावलीविपुलनालमिदं प्रियायाः ।

---

१७९ [1] MS म [2] MS ते (ti) [3] Read भारमालोचयामः ? But the repetition of the verb आलोच् is suspicious

१८० [1] MS °पत्त्र and °दृशा (read °दृशो ?)

१८१ [1] *Sic* MS (for न्ति ?) [2] MS मा [3] MS द्र

१८२ [1] *Sbhv* न्न

उत्तुङ्गसंगतपयोधरपद्मयुग्मं
नाभेरधः कथयतीव महानिधानम् ॥

१८३

*Skm II 109 (कस्यचित्)

यन्नामापि सुखाकरोति[1] कलयत्युर्वीमपि द्यामिव
प्राप्तिर्यस्य यदङ्गसङ्गविधिना किं यन्न निह्नूयते ।
अन्तः किं च सुधासपत्नमनिशं जागर्ति यद्रागिणां
विश्रम्भास्पदमद्भुतं[4] किमपि तत्कान्तेति तत्त्वान्तरम् ॥

१८४

Śp 3340 (कस्यापि)
Sahityad p 290 (anon) Sāhityak ad x 6 (anon) *Sml P 79b (कस्यापि)

तन्वङ्ग्याः[1] स्तनयुग्मेन मुखं न प्रकटीकृतम् ।
हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥

भोजदेवस्य ॥

१८५

हन्तु नाम जगत्सर्वमविवेकि कुचद्वयम् ।
प्राप्तश्रवणयोरक्ष्णोर्न मुक्तं जनमारणम् ॥

धर्मकीर्त्तेः ॥

१८६

Daśar ad IV 50 (anon) At p 14 (anon)

तन्वङ्गीनां[1] स्तनौ दृष्ट्वा शिरः कम्प[य]ते युवा ।
तयोरन्तरसंलग्नां[2] दृष्टिमुत्पाटयन्निव ॥

पाणिनेः ॥

---

१८२ [1] MS तु [2] Sbhv प्रोत्तुङ्गपीवर [3] MS भो with the ā erased

१८३ [1] MS ते (ti) [2] MS सुधासयत्न [3] Skm °श्रान्ता [4] Skm °स्तुत

१८४ [1] MS ङ्ग्या

१८६ [1] MS ङ्गी Daśar and At read स्तनावालोक्य तन्वङ्ग्याः [2] Daśar, At °निर्मग्नो According to At the verse is a समस्या, the second line being added

